तथा च प्रतिष्ठाध्वंसः प्रतिष्ठाकालीन यावदस्पृश्यादिप्रतियोगिकानादिसंसर्गाभावसहितः पूज्यत्वप्रयोजकः स च प्रागभावोऽत्यन्ताभावश्च क्वचित् क्वचित् । कामिनीचरणाभिघातदोहदादिभिरशोकपुष्पोत्कर्षदर्शनादपि नाधेयशक्तिः समयविशेषावच्छिन्नचरणदोहदादिसंयोगध्वंसस्यैव कारणत्वात् चरणाभिघाताद्दृष्टभागान्तजनितवृक्षादेर्वा तदुपपत्तिः कालान्तरे पुष्पाद्युत्कर्षात् दुःखावयवोपचयावश्यम्भावेन वृक्षभेदावश्यकत्वात् । नापि ताम्रकांस्यादावम्लभस्मसंयोगादिजन्यशुद्धिरूपा आधेयशक्तिः तत्संयोगध्वंसस्य संयोगसमानकालीनास्पृश्यस्पर्शादिप्रतियोगिकयावदनादिसंसर्गाभावसहितस्य शुद्धिपदार्थत्वात् । भस्मादिसंयोगजनितः कांस्याद्युपभोक्तृनिष्ठः संस्कार एव शुद्धिरित्यन्ये । अभिमन्त्रितपयःपल्लवादावपि समयविशेषावच्छिन्नाभिमन्त्रणध्वंस एव व्यथाद्युपनायकः तत्तन्मन्त्रदेवतासन्निधिर्वा । कलमबीजादीनामापरमाणवन्तभङ्गे तत्र चावान्तरजात्यभावे नियत कलमजातीयादिसिद्धिरपि परमाणुपाकजविशेषादेव कार्य्यवृत्तिरूपादिसजातीयस्य पूर्वरूपादिविजातीयस्य परमाणौ पाकजरूपादेरुभयसिद्धत्वात् यथाहि कलमबीजं यवादिजात्या व्यावर्त्यते तथा तत्परमाणवोऽपि पाकजैरेव। एवं माषकर्षणजनितात् परमाणुपाकपरम्पराविशेषादेव हैमन्तिकशस्योत्पत्तिः। एतेन लाक्षारसावसेकादयो व्याख्याताः। निमित्तविशेषजनितपाकजास्तत्फलविशेषः यथा हारीतमांसं हरिद्रानलसाधितमुपयोगात् सद्योव्यापादयति नान्यथा साधितमित्यादि । यत्र च तोयतेजोवायुषु न पाकजोविशेषस्तत्रोद्भवानुद्भवद्रवकठिनत्वादयोविशेषास्तदुपनायकादृष्टविशेषादेव । तुलादौ चाधिवासपूर्वकतुलारोहणसामग्री तुल्यस्य सत्यासत्यप्रतिज्ञत्वसहिता प्राचीनाधर्म्माधर्म्मफले तज्जयभङ्गौ जनयति । यद्वा अहं निष्पापः पापवान् वेति तुलारूढाभिशस्तज्ञानविशेषसहिता सा तथा, तदाहुः, "तांस्तु देवाः प्रपश्यन्ति स्वश्चैवान्तरपुरुष" इति अथ वा प्रतिज्ञाशुद्धशुद्धौ अपेक्ष्य तया धर्म्माधर्म्मौ जन्येते ताभ्याञ्च जयपराजयौ सत्यासत्यप्रत्यभिज्ञाभिशस्ततुलारोहणस्येष्टानिष्टफलत्वेनार्थतो विधिनिषेधात् । अभिशस्तः सत्यप्रतिज्ञो विजयकामस्तुलामारोहेदित्यसत्यप्रतिज्ञो न तुलामारोहेदिति श्रुतेरूहनयनात् यद्वा तया देवतासन्निधिः क्रियते ताश्च कर्म्मानुरूपलिङ्गमभिव्यञ्जयन्ति ।

कस्तर्हि शक्तिपदस्यार्थः कारणत्वं तच्च स्वस्वव्याप्येतरसकलसंपत्तौ कार्य्याभावव्यापकाभावाप्रतियोगित्वम् । अथ वा यत्र कार्य्याभावव्याप्यता इतराभावावच्छिन्ना तत्कारणबीजे अङ्कुराभावव्याप्यता न वीजत्वेनावच्छिद्यते इतरसमवधाने सति वीजादङ्कुरसत्त्वात्, किन्त्वितराभावेनावच्छिद्यते इतराभावावच्छिन्ना तत्कारणबीजे अङ्कुराभावव्याप्यता न वीजत्वेनावच्छिद्यते इतराभावे वीजस्याङ्कुराभावनियमात् । शिलाशकलेष्वङ्कुराभावव्याप्यता शिलात्वेनैवावच्छिद्यते । यद्वा अन्यासमवधानावच्छिन्नकार्य्यानुत्पत्तिव्याप्यत्वं कारणत्वं, रासभादेः स्वतएव कार्य्याभावव्याप्यता अन्यासमवधानस्य वैयर्थ्येनानवच्छेदकत्वात् अनन्यथासिद्धनियतपूर्ववर्त्तिजातीयत्वं वा तत्त्वम् अन्यथा सिद्धञ्च त्रिधा येन सहैव यस्य यं प्रति पूर्ववर्त्तित्वमवगम्यते, यथा घटं प्रति दण्डरूपस्य, अन्यं प्रति पूर्ववर्त्तित्वे ज्ञाते एव यं प्रति यस्य पूर्ववर्त्तित्वमवगम्यते यथा शब्दं प्रति पूर्ववर्त्तित्वे ज्ञात एव ज्ञानं प्रत्याकाशस्य, अन्यत्र क्लृप्तनियतपूर्ववर्त्तिन एव कार्य्यसम्भवे तत्सहभूतत्वम्, यथा गन्धवति गन्धानुत्पादाद्गन्धं प्रति तत्प्रागभावस्य नियतपूर्ववर्त्तित्वकल्पनात् पाकजस्थले गन्धं प्रति रूपादिप्रागभावादीनामप्यन्यथासिद्धत्वम् एतच्चितयव्यतिरेके नियतपूर्ववर्त्तित्वं कारणत्वम् । यागापूर्वयोस्तु यागपूर्ववर्त्तित्वेऽवगते न त्ववगम्यमाने यत्र जन्यस्य पूर्ववर्त्तित्वेऽवगते जनकस्य पूर्वभावोऽवगम्यते तत्र जन्येन जनकस्यान्यथासिद्धिः यत्र च जनकस्य तथात्वेऽवगते जन्यस्य पूर्वभावावगतिस्तत्र तद्द्वारा तस्य जनकत्वमेव । दण्डसंयगमनयोस्तु युगपदेव पूर्वभावित्वग्रहः स्वस्वानन्तरोत्पत्तिकसकलसमवधाने सत्यपि यस्याभावात् कार्यं न जायते सति च जायते तज्जातीयं प्रति तदनन्यथासिद्धम् । अनन्यथासिद्धनियतपूर्ववर्त्तित्वं कारणत्वमित्यन्ये तन्न ईश्वरतद्बुद्ध्यादीनामसंग्रहात् । तद्व्यतिरेकस्य तत्समवधानव्यतिरेकस्य वाऽभावात् । कार्य्यस्यान्यथानुपपद्यमानता व्यवस्थाप्यत्वं वाऽनन्यथासिद्धत्वम् । नन्वेवमतिरिक्तशक्तौ साधकबाधकप्रमाणाभावान्नित्यं संशयः न च साधकाभावस्य बाधकत्वं बाधकाभावस्य साधकत्वादिति चेन्न साधकाभावेन वह्न्यावन्यत्रसिद्धातीन्द्रियधर्म्माभावसाधने लाघवं बाधकाभावेनातीन्द्रियधर्म्मसाधने गौरवमिति साधकाभावात्तदभाव एव सिध्यतीति । इति शक्तिवादः ।

अथ मुक्तिवादः। परमप्रयोजनन्त्वनुमानस्यापवर्गः। "आत्मा वा अरे श्रोतव्योमन्तव्योनिदिध्यासितव्यः (साक्षात् कर्त्तव्यः) इति श्रुतेः स च समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसः। ननु नासौ पुरुषार्थः अतीतदुःखध्वंसस्य सिद्धत्वात् अनागतदुःखस्य ध्वंसयितुमशक्यत्वात् वर्त्तमानस्य पुरुषप्रयत्नं विनैव विरोधिगुणनाश्यत्वात्। अतीतदुःखवत् हेतूच्छेदे पुरुषव्यापारः प्रायश्चित्तवदिति चेत् तत्र किं हेतूच्छेदस्य सुखदुःखाभावेतरत्वेन स्वतोऽपुरुषार्थत्वात् अनागतानुत्पादमुद्दिश्य क्रियमाणत्वाच्च यथा तत्र दुःखानुत्पादः पुरुषार्थस्तथेहापीति विवक्षितम्, अथानुत्पादस्य प्रागभावत्वेनासाध्यत्वात् फलान्तरस्याभावाच्चानन्यगतिकतया कण्टकनाशवद्दुःखसाधननाश एव स्वतः पुरुषार्थस्तथेहापीति वा, उभयथापि दुःखध्वंसस्यापुरुषार्थत्वमेव न तयोरपि पुरुषार्थत्वमिति वच्यते, मैवं दुःखान्तरध्वंसस्यायत्नसाध्यत्वेऽपि तादृशदुःखध्वंसस्य मिथ्याज्ञानोच्छेदद्वारा पुरुषप्रयत्नाधीनतत्त्वज्ञानसाध्यत्वात् तथा हि तत्त्वज्ञानात् सवासनमिथ्याज्ञानाभावे दोषानुत्पत्तौ प्रवृत्त्यभावेऽदृष्टानुत्पत्तौ जन्माभावे तादृशदुःखध्वंसो भवति। अथ चरमदुःख उत्पन्ने तद्ध्वंसस्तज्ज्ञानादेव भविष्यति तदनुत्पादे तत्त्वज्ञानादपि न स्यादिति चेन्न प्रतियोगिवत्तत्त्वज्ञानस्यापि तद्धेतुत्वात्कुल्यवदुभयोरपि कारणत्वात् तेन विना तदनुत्पत्तेः। अतएव शुकस्य तत्त्वज्ञानमुत्पन्नमिति तस्य तद्ध्वंस उत्पन्नोनास्मदादीनां तत्त्वज्ञानं नोत्पन्नमस्ति तेन तद्ध्वंसोनास्मदादीनामिति चेत् अनादौ संसारे तत् कुतो नोत्पन्नम् स्वकारणाभावादिति चेन्न अन्वयव्यतिरेकानुविधायिनस्तत्त्वज्ञानादन्यस्य निष्प्रमाणस्याभावात्। मुक्तौ स ध्वंसोऽस्त्येव तस्मिन् सति मुक्तिरस्त्येवेति स मुक्त्युपपादकोपपाद्य इति सर्ववाद्युपगता मुक्तिः सा अन्या वा। ननु ध्वंसार्थं दुःखमुपादेयं तदनुत्पाद्य ध्वंसानुत्पादादिति चेत्सत्यं पुरुषार्थहेतुत्वेन लोके दुःखतत्साधनयोरप्युपादानदर्शनात् अनागतकुम्भनाशार्थं मुद्गरादौ प्रवृत्तिदर्शनादनागतदुःखध्वंसार्थमपि प्रवृत्तिः। चरमदुःखध्वंसो न दुःखध्वंसत्वेनोद्देश्यः अयत्नसिद्धदुःखान्तरध्वंसवदपुरुषार्थत्वादिति चेन्न समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसत्वेनोद्देश्यत्वात् दुःखासंभिन्नसुखवत् तस्य पुरुषप्रयत्नसाध्यत्वमेव इत्युक्तम्। एतेन दुःखध्वंसत्वमेव

मोक्षत्वं तत्तदात्मयावद्दुःखध्वंससमुन्मूलनदशायान्तु तथा व्यपदेशः । प्रति-
पुरुषं दुःखध्वंसस्तोमस्य व्यक्तिस्थानीयत्वात् तेजोऽभावोन्मूलितान्धतम-
सपदप्रयोगवत् यथा संवलितएव द्वाविति बुद्धिव्यपदेशौ प्रवृत्तिरपि सं वल-
नार्थमित्यपास्तम् मिलितानामसाध्यत्वात् मेलकस्यानतिरिक्तत्वेऽतिप्रस-
ङ्गात् अतिरिक्तत्वे जन्यस्य ध्वंसावृत्तेः । अजन्यस्य पुरुषार्थत्वाभावात् साध्य-
तया संवलने भोगावश्यम्भावात् । अतएव संस्काराजनकभोगविषय दुःखध्वंसः
संस्काराजनकानुभवध्वंसो वा मुक्तिः नचातिव्याप्तिः जनकत्वस्याजनयत्यपि
भावादिति निरस्तम् अपुरुषार्थत्वात् । अन्ये तु दुःखप्रागभावासहवृत्तिदुः-
खसाधनध्वंसो मुक्तिः लोकेऽहिकण्टकादिनाशस्य वैदिके प्रायश्चित्तादौ
पापनाशस्यानन्यगतिकतया दुःखसाधनध्वंसत्वेन पुरुषार्थत्वात् अथाऽहि
कण्टकादिपापादेरनुद्देश्यता तेन तज्जन्यं दुःखं न भवतीति दुःखानुत्पाद
मुद्दिश्य प्रवृत्तेर्दुःखानुत्पाद एव प्रयोजनं न तु दुःखसाधनाभावः सुख
दुःखाभावेतरत्वमिति चेन्न दुःखानुत्पादस्य प्रागभावत्वेनानादितयाऽसा
ध्यत्वात् न च तत् पालनसाध्यं पालनं हि न तत्स्वरूपं तस्यासाध्यत्वात्
नोत्तरसमयसम्बन्धः अभावे सम्बन्धिद्वयातिरिक्तस्य तस्य तस्यामानकत्वादन-
भ्युपगमाच्च । नापि सम्बन्धिद्वयरूपं साध्यं प्रागभावस्यासाध्यत्वात् समयतदु-
पाध्योश्च प्रयत्नं विनैव सिद्धेः अथ दुःखे द्वेषाद्यथा तदभावइच्छा तथा दुःख-
साधनद्वेषात्तदभावेऽपीच्छा तथा साधने प्रवृत्तिरिति चेन्न यदिच्छया यत्साधने
यस्य प्रवृत्तिस्तस्यैव तत्प्रयोजनत्वमिति दुःखसाधनाभावस्यैव प्रयोजनत्वात् ।
अथ चिकीर्षायोनियत्ने प्रयोजनज्ञानापेक्षा तेन विनोपायेन चिकीर्षा न तु
द्वेषयोनियत्ने अनिष्टसाधनताज्ञानादहिकण्टकादौ द्वेषो द्वेषाच्च तत्त्यागानु-
कूलो यत्न उत्पद्यते अयमेव हि द्वेषस्वभावो यत् प्रतिबन्धकं विना स्वविना-
श्यविषयनाशानुकूलं यत्नमुत्पादयति अन्यथा प्रयत्नद्वैविध्यानुपपत्तेः । अतएव
फलं विनैवोत्कटक्रोधान्धानामात्मघाते प्रवृत्तिरिति चेन्न प्रयोजनमनुद्दिश्य
द्वेषमात्राद्दुःखैकफलके प्रेक्षावतां यत्नानुत्पादात् क्रोधान्धानामपि ता-
त्कालिकफलाभिमानोऽस्त्येव उत्कटरागान्धानामिव परदारादावपि प्रवृत्ते-
रिति तन्न दुःखं मे मा भूदित्युद्दिश्य प्रायश्चित्तादौ प्रवृत्तेः दुःखानुत्पाद-
स्यैव प्रयोजनत्वात् न च प्रागभावस्यासाध्यत्वं दुःखकारणविघटनद्वारा

तस्यापि दुःखकारणसमवधानदशायां कृतौ सत्यां दुःखसाधननाशे सत्यग्रिमसमये प्रागभावस्वरूपमस्ति तेन विना नास्तीत्यन्वयव्यतिरेकयोस्तत्र सत्त्वात् घटेऽपि कृतौ सत्यमग्रिमक्षणे तत्सत्त्वं तेन विना नेत्येव कृति साध्यत्वं न तु प्रागसतोऽग्रिमक्षणे समुत्पत्तिः गौरवात् कृतिं विना न यत् स्वरूपं कृतिसाध्यं तत्प्रागभावस्वरूपन्तु न तथेति चेन्न कृतिध्वंसेऽपि घटसत्त्वेनाग्रिमक्षणे इतरावश्यकत्वात् । अतएव योगवत् क्षेमस्याप्यनागतानिष्टानुत्पदजनकस्य परीक्षकप्रवृत्तिविषयत्वमिति वक्ष्यते निषेधापूर्वप्रस्तावे । ननु प्रायश्चित्तनाश्यपापजन्यदुःखस्य प्रागभावोयद्यस्ति तदा दुःखमावश्यकं तस्य प्रतियोगिजनकत्वनियमात् नास्ति चेत्तर्हि तदभावादेव दुःखानुत्पाद इत्युभयथापि प्रायश्चित्तमफलं तस्माद्दुःखसाधनध्वंसमुखेन प्रागभावस्यापि साध्यतेति तत्रैव कृतिसाध्यतापर्यवसानात् दुःखसाधनध्वंस एव पुरुषार्थो न तु दुःखानुत्पादार्थितयेति तत्र प्रागभावसत्त्वासत्त्वविचारो वायसदशनविचारवत् अथ तदापि प्रागभावस्यासत्त्वेन स्वभावात् पापं न दुःखसाधनमिति न तन्नाशार्थं प्रवर्त्तेत तस्य सत्त्वे च पापमादायैव तस्य दुःखोत्पादकत्वनियमात् प्रायश्चित्ते सत्यपि गलेपादिकया पापावस्थानमिति न ततः पापनाश इति चेन्न प्रागभावस्यासत्त्वेऽपि दुःखसाधनजातीयनाशस्य पुरुषार्थत्वात् सत्त्वेऽपि पापान्तरमादायापि दुःखजनकत्वात् प्रायश्चित्तात् पापनाशः स्यादेवेति प्रागभावसत्त्वासत्त्वसन्देहेऽपि प्रायश्चित्तादौ प्रवृत्तिरप्रत्यूहैवेति । उच्यते । तत्र दुःखप्रागभावोऽस्त्येव तस्यैव दुःखानुत्पादरूपत्वेन पुरुषार्थत्वात् स च पापनाशद्वारा प्रायश्चित्तसाध्य इति प्रागभावसत्त्वेऽपि न निष्फलं प्रायश्चित्तं तेन प्रागभावेन दुःखमवश्यं जननीयमिति चेत् सत्यं किन्तु पापान्तरमासाद्य, न चैवं प्रायश्चित्तमफलं, दुःखानुत्पादेन तस्य सफलत्वात् न च दुःखानुत्पादस्याऽपि दुःखानुत्पादान्तरमेव फलं तच्च तत्र नास्तीत्यफलत्वं स्वरूपसतएव तस्य पुरुषार्थत्वात् अनवस्थानाच्च । अतोऽनेन पापेन दुःखं मे मा भूदिति विद्यमानपापनाशार्थं प्रायश्चित्ते प्रवृत्तिः । एतेन चीर्णप्रायश्चित्ते दुःखप्रागभावोनास्त्येव अन्यथा तस्य प्रतियोगिनाश्यत्वेनानिर्मोक्षप्रसङ्गात् न च प्रायश्चित्तवैफल्यं न वा भाविदुःखमयकर्मोपदेशकत्वे नानाप्तत्वं तस्य पाप-

ध्वंसेनैव सफलत्वात्, प्रागभावानिश्चयेऽपि नरकसाधनपापनिश्चयस्तन्नाशार्थं प्रवृत्तिरित्यपास्तं दुःखसाधननाशस्य स्वतोऽपुरुषार्थत्वात् पापान्तरेण तत्प्रतियोगिजनने तन्नाशात् तस्मात् दुःखं मे मा भूदित्युद्दिश्य तत्साधनध्वंसार्थं प्रवृत्तिरिति दुःखानुत्पाद एव पुरुषार्थो न तु दुःखसाधनध्वंस इति स्थितम्। अपि च न तावत् दुःखमयसंसारबीजमिथ्याज्ञानस्य ध्वंसो मुक्तिः तत्त्वज्ञानात्तन्नाशेऽपि शरीरधर्मादिसत्त्वदशायां मुक्तिप्रसङ्गात्। नापि शरीरेन्द्रियबुद्ध्यादितन्निदानधर्माधर्मध्वंसः अचीर्णप्रायश्चित्तकर्मणां भोगनाश्यत्वेन तत्त्वज्ञानानाश्यत्वात् भोगद्वारा तन्नाशस्य च पुरुषार्थत्वादिति। अपरे तु दुःखात्यन्ताभावो मुक्तिः यद्यपि परदुःखाद्यन्ताभावः स्वतःसिद्ध एव दुःखात्यन्ताभावः आत्मन्यसम्भवी घटादावतिप्रसक्तोऽसाध्यश्च तथापि दुःखसाधनध्वंसएव स्ववृत्तिदुःखस्यात्यन्ताभावसम्बन्धः स च साध्यएव नचावश्यकत्वेन सैव मुक्तिः तस्य स्वतोऽपुरुषार्थत्वेन दुःखाभावमुद्दिश्य तत्र प्रवृत्तेः "दुःखेनात्यन्तविमुक्तश्चरतीति" अत्यन्ताभावत्वेन मुक्तिश्रवणाच्च यद्यपि दुःखसाधनध्वंसेन स्वतः पुरुषार्थः अत्यन्ताभावश्च न साध्यः तथापि विशिष्टस्य पुरुषार्थत्वं, विशेषणसाध्यत्वेन विशिष्टसाध्यत्वञ्च अहिकण्टकादिनाशस्यापि तत्तद्व्यक्तिसाध्यदुःखस्य चात्यन्ताभावमुद्दिश्य तत्सम्बद्धत्वेनैव साध्यतेति तन्न अधर्मादिदुःखसाधनध्वंसस्य न मुक्तिनिर्वाहकत्वमित्युक्तत्वात्। किञ्च नाऽनागतस्य दुःखस्यात्यन्ताभावसम्बन्धः साध्यः मुक्तस्यानागतस्ववृत्तिदुःखानभ्युपगमात् अभ्युपगमे वाऽमुक्तत्वात् अत्यन्ताभावसम्बन्धावबोधाच्च। नाप्युत्पन्नस्ववृत्तिदुःखस्य, तद्वृत्तेस्तत्रात्यन्ताभावविरोधात् तदभावस्य स्वतःसिद्धत्वात् अतीतदुःखाभावस्यानुद्देश्यत्वाच्च। नापि परकीयदुःखात्यन्ताभावसम्बन्धः तस्य स्वतःसिद्धत्वात्। अपिच दुःखसाधनध्वंसस्य नात्यन्ताभावसम्बन्धत्वे मानम् दुःखसाधनध्वंसादावस्य दुःखस्यात्यन्ताभाव इति बुद्धिव्यपदेशौ स्त इति चेन्न तस्य समानाधिकरणदुःखासमानकालदुःखाभाव विषयत्वेनाप्युपपत्तावतिरिक्तसम्बन्धाविषयत्वात्। एतेन सर्व्वदुःखप्रागभावसंसर्गाभावोमुक्तिः घटादेश्च न मुक्तत्वं दुःखसाधनध्वंसविशेषिततद्योगिनो मुक्तपदार्थत्वात् तथैव व्यवहारात् योगरूढिभ्यां पङ्कजादिपदवाच्यत्वव

दिति परास्तं प्रागभावसंसर्गाभावस्य स्वतोऽनुद्देश्यत्वात् प्रत्युतात्यन्ताभावस्यासाध्यत्वेन ध्वंसरूपत्वेन तस्य दुःखरूपतया हेयत्वात् । प्राभाकरास्तु आत्यन्तिकदुःखप्रागभावो मोक्षः न च तस्यानादित्वेनापुरुषार्थत्वं कदाचित् कृत्यनपेक्षित्वेऽपि प्रतियोगिजनकाधर्म्मनाशमुखेन तस्य कृतिसाध्यत्वात् कृत्यधीनतत्त्वज्ञानादधर्म्मनाशे सत्यग्रिमसमये दुःखप्रागभावस्वरूपं नास्ति तथाच विनाऽधर्म्मेण दुःखाजननान्न तत्प्रागभावस्वरूपमस्तीति घटवत्कृतिसाध्यत्वात् व्यवस्थापितञ्च त्वया प्रागभावस्य कृतिसाध्यत्वमह्निकण्टकादिनाशप्रायश्चित्तहोमादिप्रवृत्तिस्थले । न चैवं युगपद्धर्म्मध्वंस एव मुक्तिः प्रागभावस्यानादितया विवक्षितविवेकेन तत्रैव कृतिसाध्यत्वपर्य्यवसानादिति वाच्यम् अधर्म्मध्वंसस्य स्वतोऽपुरुषार्थत्वात् दुःखोत्पादहेतुत्वेनैव तस्य प्रयोजनता वाच्या सा च कथमसाध्यत्वे प्रागभावस्य स्यादिति अतएव दुःखजन्मप्रवृत्तिदोषेत्यादि सूत्रमपि सङ्गच्छते अन्यथा मिथ्याज्ञानाद्यनुत्पादानां दुःखानुत्पादाहेतुत्वेनासङ्गतं स्यादित्यास्थिषत । तदतिस्थवीयः । तथाह्यस्तु प्रागभावस्य साध्यत्वं तथापि तस्य प्रतियोगिजनकत्वनियमात् मुक्तस्यापि दुःखोत्पादप्रसङ्गः अधर्म्मशरीरादिसहकारिविरहान्न दुःखोत्पाद इति चेत्तर्हि उत्तरावधिरत्वेनानादेरत्यन्ताभावापत्तौ प्रागभावत्वव्याकोपः । प्रतियोगिजनकनाश्यजातीयत्वेन तत्र प्रागभावव्यपदेशो वस्तुतो नित्य एव स इति चेन्न नित्यत्वेनात्यन्ताभावरूपतया प्रागभावान्यत्वेन नाश्यजातीयत्वाभावात् प्रतियोगिजनकत्वमुखेन तस्यासाध्यत्वाच्च । अपिच मुक्तेः प्रागभावस्य समानाधिकरणं भावि दुःखं न प्रतियोगि, तस्याभावात् भावेऽवाऽमुक्तत्वापातात् नापि समानाधिकरणमतीतं वर्त्तमानञ्च तत्प्रागभावस्य विनष्टत्वात् नापि व्यधिकरणम् अन्यवृत्तिदुःखस्यान्यत्रात्यन्ताभावेन प्रागभावाभावात् तस्य प्रतियोगिसमानदेशत्वात् । न च दुःखप्रागभावस्य कलञ्जभक्षणप्रागभावस्य च समानाधिकरणमेव भावि दुःखं भक्षणञ्च प्रतियोगि । ननु दुःखाभावो न पुरुषार्थः सुखस्यापि हानिस्तुल्यायव्ययत्वात् न च बहुतरदुःखानुविद्धतया सुखस्यापि प्रेक्षावद्धेयत्वम् आवश्यकत्वेन दुःखस्यैव हेयत्वात् सुखस्य निरुपधीच्छाविषयत्वात् अन्यथा दुःखाननुविद्धतया तथात्वेन

पुरुषार्थत्वविरोधादिति चेन्न सुखमनुद्दिश्यापि दुःखभीरूणां दुःखहा-
नार्थं प्रवृत्तिदर्शनात् दुःखाभावस्य स्वतएवपुरुषार्थत्वात् नहि दुःखाभाव
दशायां सुखमस्तीत्युद्दिश्य दुःखाभावार्थं प्रवर्त्तन्ते वैपरीत्यस्यापि सम्भ-
वे सुखस्याप्यपुरुषार्थतापत्तेः अतो दुःखाभावदशायां सुखं नास्तीति
ज्ञानं न दुःखाभावार्थिप्रवृत्तिप्रतिबन्धकं तस्मादविवेकिनः सुखमात्र
लिप्सवो बहुतरदुःखानुविद्धमपि सुखमुद्दिश्य "शिरोमदीयं यदि यातु
यात्विति, कृत्वा परदारादिष्वपि प्रवर्त्तमानाः "वरं वृन्दावनेऽरण्ये" इत्यादि
वदन्तोनात्राधिकारिणः । ये च विवेकिनोऽस्मिन् संसारापारकान्तारे किय-
न्ति दुःखदुर्दिनानि कियतो सुखखद्योतिकेति कुपितफणिफणामण्डलच्छाया
प्रतिममिदमिति मन्यमानाः सुखमपि हातुमिच्छन्ति तेऽत्राधिकारिणः । न
च भोगार्थिनामप्रवृत्तौ पुरुषार्थता हीयते कस्यचिदप्रवृत्तावपि चिकित्-
सादेः पुरुषार्थत्वात् । अथवा दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते
न हि मूर्च्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः, पुरुषार्थत्वे सुखवज्ज्ञाय-
मानं नियमात् न च मुक्तिज्ञानं सम्भवतीति नहि दुःखाभावं जानीया-
मित्युद्दिश्य प्रवृत्तिः किन्तु दुःखं मे मा भूदित्युद्दिश्य स्वतो दुःखाभाव एव
पुरुषार्थः तस्य ज्ञानन्तु स्वकारणाधीनं न तु पुरुषार्थतोपयोगि सुखी
स्यामित्युद्दिश्य प्रवर्त्तते न तु सुखं जानीयामिति सुखमेव तथास्तु न
तदवगमः तस्यानावश्यकत्वेनान्यथासिद्धत्वात् गौरवाच्च । किञ्च बहुतर
दुःखजर्ज्जरकलेवराद्दुःखाभावमुद्दिश्य मरणेऽपि प्रवर्त्तमाना दृश्यन्ते न च
मरणे तस्य ज्ञानमस्ति । न ते विवेकिन इति चेन्न पुरुषार्थत्वे विवेकानुपयो-
गात् किञ्च चरमदुःखानुभवेऽनागतदुःखध्वंसोऽपि विषयः तथाचाग्रिमक्षणे
तदुपरमः तद्विषयकञ्च विनश्यदवस्थं ज्ञानमस्तीति वर्त्तमानमप्यचिरमनुभूयते
ज्ञानसमये मुक्तिलक्षणस्य सत्त्वात् ज्ञानं मुक्तिविरोधि । प्रमाणन्तु देवदत्त
दुःखत्वं दुःखत्वं वा स्वाश्रयासमानकालीनध्वंसप्रतियोगिवृत्ति, कार्य्यमात्र-
वृत्तिधर्मत्वात् सन्ततित्वाद्वा एतत् प्रदीपत्ववत् । सन्ततित्वञ्च नानाकालीन
कार्य्यमात्रवृत्तिधर्मत्वम् एवञ्च सुखत्वादावपि साध्यं, तेन समूलोच्छेदे मोक्षः
नचप्रयोजकत्वं सन्तत्युच्छेदे मूलोच्छेदस्य प्रयोजकत्वात् । प्रकृते च मिथ्या
ज्ञानस्य संसारमूलस्य श्रवणादिक्रमेणोत्पन्नतत्त्वज्ञानान्निवृत्तिः सम्भवत्येव

"आत्मा ज्ञातव्यो न पुनरावर्त्तत इति" श्रुतिस्तत्र प्रमाणम्। रात्रिसत्रन्या येनानुवादोपनोता पुनरावृत्तिरधिकारिनियमात् स आत्मज्ञो न पुनराववर्त्तते न पुनः शरीरीभवेदित्यर्थः 'आत्मा वा अरे श्रोतव्योमन्तव्योनिदिध्यासितव्यः (साक्षात् कर्त्तव्यः) इत्युपक्रम्य। "दुःखेनात्यन्तविमुक्तश्चरतीति" श्रुतिश्च मानम् आचार्यास्तु "अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः" इति श्रुतिस्तत्र मानं वावसन्तमिति यङ्लुकि तेन संसारदशायां क्षणमात्रमशरीरत्वेन नान्यथासिद्धिः ननु द्वन्द्वस्वरसेन मिलितसुखदुःखोभयनिषेधः प्रतीयते स तु नित्यत्वात् प्राप्तएव एकैकनिषेधे च वाक्यभेदापत्तिः न च मुक्तौ प्रमाणमिति चेन्न द्वित्वेनैकेन रूपेणोपस्थितयोः प्रत्येकं निषेधावगमेऽपि वाक्यभेदाभावात् धवखदिरौ छिन्धीत्यत्र प्रत्येकं छिदान्वय इव न हि तत्र मिलितछिदा। अपि च "न प्रियरूपं किञ्चिदस्तीति मिलितनिषेधारोप्यैकाश्रये प्रत्येकाभावे एकैकान्वयस्याशरीरे योग्यत्वात् प्रत्येकाभाव एव पर्य्यवस्यति। अत एव सर्व्वमुक्तिरूपे सर्व्वदुःखसन्ततिपक्षीकरणे तत्सिद्धिः अन्यथा मुक्तिरपि न स्यात् अत्रैव व्यभिचारात् यदि चोभयात्मान एव केचित्तदा तच्छङ्कया मोक्षार्थं न कश्चित् प्रवर्त्तते। शमदमभोगानभिषङ्गादिमुक्तिचिह्नेन श्रुतिसिद्धेन सन्देहनिवृत्तिरिति चेन्न संसारित्वेन मुक्तियोग्यत्वात् न तु तद्विशेषणशमादिभ्रमत्वेन सामान्ये बाधके सत्येव योग्यतया विशेषनिष्ठत्वात्। किञ्च शमादयः श्रुत्या मुक्तौ सहकारितया बोधिता न तु योग्यतया तत्त्वेऽपि संसारित्वेन तेऽपि साधनीयाः। शमादिकमपि हि कार्य्यं तत्रापि संसारित्वेन योग्यता सामान्ये बाधकाभावात्। न च नित्यसुखाभिव्यक्तिर्मुक्तिः। साहि न नित्या मुक्तशरीरिणो रविशेषापातात् नोत्पाद्या तद्धेतुशरीराद्यभावात् ज्ञानमात्रे सुखमात्रे वा तद्धेतुत्वावधारणात् निःसंसारदशायां तद्धेतुसामान्ये बाधकाभावात्। अतएव सर्गादौ शरीरकल्पना। किं वा तज्जनकं न तावदात्ममनोयोगः तस्याऽदृष्टादिनिरपेक्षस्याजनकत्वात् विषयमात्रापेक्षे तु संसारिदशायामपि तदभिव्यक्तिप्रसङ्गः नापि योगजोधर्म्मः सहकारीतस्योत्पन्नभावत्वेन विनाशित्वेऽपरत्र निवृत्त्यापत्तेः न च तज्जन्याभिव्यक्तिरनन्ता तस्या अपि ततएव नाशात्। अथ तत्त्वज्ञानात् सवासनमिथ्याज्ञाननाशे

दोषाभावेन प्रवृत्त्याद्यभावाद्धर्माधर्मयोरनुत्पादे प्राचीनधर्माधर्मक्षयाद्दुःखसाधनशरीरादिनाश एव तत्र हेतुः अतएव तस्यानन्त्येनाभिव्यक्तिप्रवाहोऽप्यनन्त इति चेन्न शरीरं विना तदनुत्पत्तेः तस्य तद्धेतुत्वे मानाभावाच्च न च मोक्षादिप्रवृत्तिरेव मानं दुःखहानार्थितया तदुपपत्तेः । न च नित्ये सुखे मानमस्ति "नित्यं विज्ञानमानन्दम् ब्रह्म" "आनन्दं ब्रह्मणोरूपं तच्च मोक्षे प्रतिष्ठितमित्यादि" श्रुतिर्मानमिति चेन्न उपजननापायवतोर्ज्ञान सुखयोरहं जानाम्यहं सुखीति अभिन्नत्वेनानुभूयमानयोर्ब्रह्माभेद बोधने प्रत्यक्षबाधात् । अथ सुखस्य ब्रह्माभेदबोधनादेवायोग्यतयाऽनित्यं सुखं विहाय वाक्यार्थत्वेन नित्यसुखसिद्धिः स्वर्गवत् न तु नित्यसुखे सिद्धे तदभेदबोधनं येनान्योन्याश्रयः, यद्वा नित्यं सुखं बोधयित्वा तदभिन्नं ब्रह्म बोध्यते न च वाक्यभेदः वाक्यैकवाक्यत्वादिति चेन्न आत्मनोऽनुभूयमानत्वेन तदभिन्नस्य नित्यसुखस्याप्यनुभवप्रसङ्गात् सुखमात्रस्य स्वगोचरसाक्षात्कारजनकत्वनियमात् तदननुभवे वात्मनोऽप्यनुभवो न स्यात् । अथात्माभिन्नं नित्यसुखमनुभूयत एव सुखत्वं तु तत्र नानुभूयत इति चेन्न सुखानुभवसामग्र्या एव सुखत्वानुभावकत्वात् तस्मादानन्दं ब्रह्मेति मत्वर्थीयाच्प्रत्ययान्तत्वेनानन्दवत्त्वं बोध्यते नाभेदः, अन्यथा नपुंसकत्वानुपपत्तेः । एतेन ब्रह्माद्वैततत्त्वसाक्षात् कारादविद्यानिवृत्तौ विज्ञानसुखात्मकः केवलआत्मापवर्गे वर्त्तत इति वेदान्तिमतमपास्तम् स्वप्रकाशसुखात्मकब्रह्मणोनित्यत्वे मुक्तसंसारिणोरविशेषप्रसङ्गात् पुरुषप्रयत्नं विना तस्य सत्त्वादपुरुषार्थत्वाच्च अविद्यानिवृत्तिः प्रयत्नसाध्येति चेत् अविद्या यदि मिथ्याज्ञानमर्थान्तरं वा उभयथापि सुखदुःखाभावसाधनेतरत्वेन तन्निवृत्तेरपुरुषार्थत्वात् । त्रिदण्डास्तु आनन्दात्मकपरमात्मनि जीवात्मलयो मुक्तिः लयश्च लिङ्गशरीरापगमः । लिङ्गशरीरञ्चैकादशेन्द्रियाणि पञ्च महाभूतानि सूक्ष्ममात्रया सम्भूयावस्थितानि जीवात्मनि सुखदुःखावच्छेदकानीत्याहुः तन्न लिङ्गशरीरध्वंसस्य स्वतो दुःखसाधनाभावतयाऽपुरुषार्थत्वात् नचोपाधिशरीरनाशेऽचौपाधिकजीवनाशोलयः स्वनाशस्यापुरुषार्थत्वात् ब्रह्मणोनित्यत्वेन तदभिन्नस्य नाशानुपपत्तेः भेदाभेदस्य विरोधबोधेनाभावात् । नाप्यनुपप्लुता चित्तसन्ततिरपवर्गः सावद्यकत्वेनानुपप्लुतस्य दुःखाभावस्य पुरु-

षार्थत्वे चित्तसन्ततेरपुरुषार्थत्वात् शरीरादिकारणं विना चित्तसन्ततेरनुत्पादाच्च न हि चित्तमात्रं सामग्री शरीरादिवैयर्थ्यापत्तेः । नापि दुःखत्वेनात्महानमेव मुक्तिः सुखदुःखाभावेतरत्वेनापुरुषार्थत्वात् ज्ञानरूपात्महानस्यायत्नसिद्धेः अतिरिक्तहानस्याशक्यत्वात् । बहुयोगार्जिसाध्यनिरतिशयानन्दमयीं जीवन्मुक्तिमुद्दिश्य प्रवृत्तेः कारणवशादात्यन्तिक दुःखाभावरूपां मुक्तिमासादयतीति मतं तन्न मुक्तेरपुरुषार्थतापत्तेः विरक्तस्य मोक्षेऽधिकारात् सुखोद्देशेनाप्रवृत्तेश्च ।

मोक्षे च सर्वाश्रमिणामधिकारः आश्रमचतुष्टयमुपक्रम्य"स ब्रह्मसंस्थोऽमृतत्वमेतीति" श्रुतिः संकोचे मानाभावात् आकाङ्क्षाया अविशेषेणानन्तर्यस्याप्रयोजकत्वात् कथन्तर्हि "मोक्षाश्रमश्चतुर्थो वै यो भिक्षोः परिकीर्त्तितः" इति प्रमज्यां मोक्षाश्रमाङ्गः गृहस्थस्य च पुत्रदारादिसङ्गो दुर्वार इत्यसाधारण्येन तथा व्यपदेशात् "तत्त्वज्ञाननिष्ठो गृहस्थोऽपि हि मुच्यत इत्यागमाच्च एवं स्थिते मोक्षमुपक्रम्य" आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः (साक्षात् कर्त्तव्यः) इति श्रुतिः । श्रुतिभ्यश्च शरीरादिभिन्नमात्मानमवधार्य शास्त्रेण पदार्थान् विविच्य तद्बोधितोपपत्तिभिस्तस्य स्थिरीकरणरूपं मननं विदधाति न च शब्दोपपत्तिजन्यतत्त्वज्ञानात् साक्षात्कारिसंसारबीज सवासनमिथ्याज्ञाननिवृत्तिः दिङ्मोहादौ तथानुपपत्तेः । अतः श्रुतिस्मृत्युदितविधिना चिरनिरन्तरादरकारितनिदिध्यासनजन्ययोगजधर्मादात्मतत्त्वसाक्षात्कारं संसारबीजसवासनमिथ्याज्ञानोन्मूलनसमर्थमासाद्य दोषाभावात् प्रवृत्त्यादेरभावेऽनागतधर्माधर्मानुत्पादेनानादिभवसञ्चितकर्म्मणां भोगेन क्षयादपवृज्यते । उपदेशमात्राच्छरीरभिन्नात्मावगमेऽप्यन्यपरत्वशङ्कया संशायकस्य नाश्रद्धामलक्षालनमिति मननमावश्यकं तथा च "मन्तव्यश्चोपपत्तिभिरिति" श्रुतिरेव शास्त्रस्योपपत्तिबोधकस्यापवर्गहेतुत्वं बोधयति मननस्य तदेकसाध्यत्वात् । एवञ्च शमदमब्रह्मचर्याद्युपबृंहितयावज्जित्यनैमित्तिकसन्ध्योपासनादिकर्मसहितात्तत्त्वज्ञानान्मुक्तिः । स्यादेतत् ज्ञानकर्मणोर्न समप्राधान्येन समुच्चयः कर्मणां स्ववाक्यात् फलान्तरार्थत्वेन श्रुतत्वान्मोक्षार्थकल्पनाविरोधात् तत्त्वज्ञानस्य कर्मनैरपेक्ष्येण मुक्तिहेतुत्वप्रतीतेश्च । नाप्यङ्गाङ्गिभावेन तथा हि न कर्म सन्निपत्योपकारकं तत्त्वज्ञानशरी-

रानिर्वाहकत्वात् नापि प्रयाजादिवदारादुपकारकं स्वर्गाद्यत एव कर्मणां प्रयोजनलाभेन फलवत्सन्निधावफलत्वाभावात् उपपत्ति विरुद्धश्च ज्ञानकर्मसमुच्चयः काम्यनिषिद्धयोस्त्यागात्। नाप्यसङ्कल्पित काम्यकर्मसमुच्चयः चतुर्थाश्रमविधिविरोधात् अतएव न यावन्नित्य-नैमित्तिकसमुच्चयोऽपि। नापि यत्याश्रमविहितेन कर्मणा, तत्त्व-ज्ञाने सति गृहस्थस्यापि मुक्तेः "न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः श्राद्धकृत् सत्यवादी च गृहस्थोऽपि हि मुच्यते" इति स्मृतेः नचा-ननुगतमपि साधनम्, स्वर्गवदपवर्गे प्रकारभेदाभावात्। नाप्यज्ञानिकर्त्तव्य-तया विहितानि कर्माणि, येन तत्समुच्चयः स्यात् "संन्यस्य सर्वकर्माणीति" स्मृतेः "सर्वकर्मसंन्यासे न ज्ञानमात्राच्च मोक्ष इति स्मृतेः मैवम् आश्र-मविहितेन कर्मणा ज्ञानस्य समप्राधान्येन समुच्चयात् ज्ञानकर्मणो-स्तुल्यत्वेन मुक्त्यर्थत्वविधानात् तथा च भगवद्गीता "स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः" "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" श्रीविष्णुपुराणे "तस्मात् तत्प्राप्तये यत्नः कर्त्तव्यः पण्डितैः नरैः। तत्-प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामते" हारीतः उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः। तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम्' श्रुतिः "सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यक्-ज्ञानेन ब्रह्मचर्येणेति" एतन्-मूलकमेव "परिज्ञानात् भवेन्मुक्तिरेतदालस्यलक्षणम्। कायक्लेशभयाच्चैव कर्म नेच्छन्ति पण्डिताः। ज्ञानं प्रधानं न तु कर्महीनं कर्म प्रधानं न तु बुद्धिहीनम्। तस्मात्तयोरेव भवेत् प्रसिद्धिर्नत्वेकपक्षो विहगः प्रयाति" न च फलान्तरार्थत्वेन स्तुतस्य कर्मणः फलान्तरार्थत्वमनुपपन्नम् तथा वाक्यस्वरसात् ज्ञानतुल्यताप्रतीतेः तत्फलजनकत्वेऽपि कर्मणां शब्द एव मानमेवमन्यत्रापि। अथ वा आरादुपकारितया अङ्गाङ्गिभावेन समुच्चयः, स च प्रयाजादिवत् अपूर्वद्वारैव। यत्तु "जड़ोपाख्याने" न पपाठ गुरुप्रोक्तां कृतोपनयनः श्रुतिम्। न ददर्श च कर्माणि शास्त्राणि जगृहे न च" तद् ,योगिधर्मत्वेन सङ्गत्यागात् जातिस्मरत्वेन बालशिक्षिता-नीत्येवंपरञ्च। तदुक्तं "जज्ञे जातिस्मरो द्विजः, इति। अत्र

केचित् अनुत्पन्नतत्त्वज्ञानस्य ज्ञानार्थिनस्तत्प्रतिपक्षलोकसंग्रहो न प्रयोजनं सुखदुःखाभावतत्साधनेतरत्वात् तथाप्यकरणे लोकानां विगानाद्वित्यत्वेन यज्ज्ञानं तत्परिहारार्थं तत्कर्मसाध्यदुःखोत्पादनेनाधर्मक्षयार्थञ्चेति, तन्न तत्त्वज्ञानं प्रत्यङ्गत्वपक्षे कर्मणामपूर्वद्वारा जनकत्वं दुरितध्वंसकल्पनातो लघुत्वात् तस्माद् यानि कर्माण्युपनीतमात्र कर्त्तव्यत्वेन विहितानि सन्ध्योपासनादीनि तानि मोक्षार्थिभिरवश्यं कार्य्याणि, तत्परित्यागस्य प्रत्यवायहेतुत्वेनाशास्त्रीयत्वात् सङ्कोचे मानाभावात् । निषिद्धानि काम्यानि च बन्धहेतुत्वात् मुक्तिपरिपन्थीनि त्यज्यन्ते धनमूलानि च धनत्यागादेव त्यज्यन्ते सोऽयं "सन्न्यस्य सर्वकर्माणि" इत्यस्यार्थः । अयमेव हि सन्न्यासपदार्थः तथा च गीता "काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः, "नियतस्य तु संन्यासः कर्मणो नोपपद्यते 'मोहात्तस्य परित्यागः तामसः परिकीर्त्तित" इति । तत्त्वज्ञानं धर्मद्वारा मुक्तिसाधनं विहितत्वेन धर्मजनकत्वनियमादिति धर्मस्यैव प्राधान्यं स च धर्मो मुक्त्यैव फलेन नाश्यते इति केचित् तन्न मिथ्याज्ञाननिवृत्त्याऽदृष्टाद्वारेणैवोपपत्तावदृष्टकल्पनानवकाशात् अन्यथा भैषजादिष्वपि तथा स्यात् तत्रैव विहितत्वस्य व्यभिचारात् । अत्र वदन्ति, संसारकारणोच्छेदक्रमेण कार्य्योच्छेदान्मोक्षः । एवञ्च तत्त्वज्ञानमात्रादेव मिथ्याज्ञानोच्छेदादपवर्गः तत्र न तस्य कर्मसहकारित्वं मिथ्याज्ञानोन्मूलनेन च कर्म्म विनाकृतस्यैव दिङ्मोहादौ हेतुत्वावधारणात् कर्मणामपवर्गहेतुताश्रुतिश्च तत्त्वज्ञानद्वाराप्युपपद्यते साक्षात्तस्याश्रुतेः । तत्त्वज्ञानवतश्चाधिकारे नित्याकरणेऽपि दोषाभावेन प्रत्यवायाभावोपपत्तेः अन्यथा भोगार्थं विहितनिषिद्धाचरणेन धर्माधर्मोत्पत्तौ मोक्षाभावप्रसङ्गः ।

ननु तत्तत्तीर्थस्नानमहादानकाशीमरणादिकर्मणां तत्त्वज्ञाननैरपेक्ष्येण मुक्ति हेतुत्वं श्रूयते तत्कथं तत्त्वज्ञानमेव हेतुः, न च तेषां तत्त्वज्ञानमेव व्यापारः अनुपदं तत्त्वज्ञानानुत्पादादृष्टद्वारा तद्धेतुत्वं वाच्यं तथा चापवर्गकारणमेवादृष्टं कल्प्यतां लाघवात् न च तत्त्वज्ञानप्रतिबन्धकाधर्मनाश एव तेषां व्यापारः प्रतिबन्धकदुरितध्वंसतोऽपूर्वस्य लघुत्वात् । अथ तत्तत्कर्मणामननुगमात् कथं मुक्तिरनुगता दुःखध्वंसप्रकाराभावादिति चेन्न गुणत्वाद्

समवायसमवायिविरोधिगुणानां नाशकत्वदर्शनात्। तत्तन्नाशविशेषे तु तत्त-द्धेतुरिति चेत्तर्हि तत्तदुःखध्वंसे तत्तत्कर्म्मणामपि तथान्वयस्तु तत्रापि तत्त्वज्ञाने तत्प्रतिबन्धकदुरितध्वंसे चाननुगतानामेव तत्तत्कर्म्मणां जनकत्वं मुमुक्षुमुद्दिश्य विहितत्वादनुगतमस्तीति चेत् ज्ञानकर्म्मणोर्निरपेक्षसाधनता श्रवणात् व्रीहियववद्विकल्प एव निरपेक्षैकसाधनावरुद्धेऽपरसाधनावरुद्धेऽ-परसाधनान्वयो न विकल्पं विना सम्भवति आकाङ्क्षाविरहादिनियमात् साहित्यबोधकं विनैकं प्रत्येकैकस्य हेतुता यत्र शब्देन बोध्यते तत्र विकल्पेनान्वयो यथा व्रीहियवयोरितिव्युत्पत्तेर्वा। वस्तुतस्तु दृढभूमि-वासनमिथ्याज्ञानोन्मूलनं विना न मोक्ष इत्युभयसिद्धं तादृशमिथ्या-ज्ञाननाशे चान्वयव्यतिरेकाभ्यां तत्त्वज्ञानं कारणमवधारितमतो न तेन विना स इति तत्रापि तत्त्वज्ञानमावश्यकम्। यद्यपि मिथ्याज्ञाननाशे विरोधिगुणमात्रस्यैव तद्धेतुत्वं तथापि मिथ्याज्ञानप्रागभावासहवृत्तिमि-थ्याज्ञानध्वंसस्य तदेव साध्यत्वम्, "आत्मा ज्ञातव्यः" "न स पुनरावर्त्तते" इत्यादि श्रुतेर्मोक्षं प्रति तत्त्वज्ञानस्य हेतुत्वावधारणात् "तमेव विदित्वा-तिमृत्युमेति नान्यः पन्था विद्यतेऽनायेति" श्रुत्या तत्त्वज्ञानं विना-न मोक्ष स्तस्मिन् सत्येवेति प्रतिपादनाच्च अन्यथा स्वर्गादौ न शरीरा-दयः कल्पेरन्, कर्म्मणां तत्त्वज्ञानद्वारापि मुक्तिजनकत्वसम्भवात् प्रमा-णवतो गौरवञ्च न दोषाय, तत्कर्मणां तत्त्वज्ञानविशेष एव जनकत्वमतो न तत्रानुगमो दोषाय। वाराणसीमरणस्य तत्त्वज्ञानफलजनकत्वमागमा-देवावगम्यते। तत्त्वज्ञानाददत्तफलान्येव कर्माणि प्रायश्चित्तादिव विनश्यन्ति अन यथासिद्धशब्दबलात्। न च प्रायश्चित्तस्य दुरितोत्पत्तिनिमित्तकत्वं पापनाशफलत्वबलात्। अतएव न ब्रह्महत्यादीनां प्रायश्चित्तदुःखमेव फलं नरकफलश्रुतिविरोधात् प्रायश्चित्तविधिवैयर्थ्याच्च दुःखैकफलत्वेन तत्राप्रवृत्तेः। नापि कर्म्मान्तराधिकार एव फलं महापातकातिरिक्ते-ऽनधिकाराभावात्। अन्यथा यत्किञ्चित्त्वेनाधिकाराभावापत्तेः प्राणा-न्तिके तदभावाच्च। श्रूयते हि "भिद्यते हृदयग्रन्थिश्छिद्यते कर्मबन्धनम्। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परात्मनि" स्मृतिश्च "ज्ञानाग्निः

सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन"। इति।"नाभुक्तं चीयते कर्म" इत्यत्र प्रायश्चित्तादिस्मृतितः सङ्कोचस्यावश्यकत्वेन शब्दबोधितनाशधर्मपरत्वं लाघवात् न तु तत्तदन्यकर्मपरत्वं गौरवात् पापपुण्यक्षयहेतूनां बहुत्वात् ज्ञानस्य नाशकत्वं शब्दबोध्यमित्युक्तम्। अथ भस्मसात् पदस्य लाक्षणिकत्वेन यथा वह्नेः परम्परया भस्म तथा ज्ञानात् कर्मक्षयइत्यर्थः। तथा च "नाभुक्तं चीयते कर्मेति स्मृतिरुत्सर्गतो भोगेनैव क्षयमाह अनन्यथासिद्ध प्रायश्चित्तविधिना सा बाध्यते। ज्ञानस्य नाशकत्वञ्च भोगद्वारा सम्भवतीत्यबाधे सम्भवति न बाधकल्पनेति चेन्न कर्मणो भोगनाश्यत्वे ज्ञानस्यानाशकत्वात् न हि भोगस्तत्त्वज्ञानव्यापारः तथाऽश्रवणात् तेन विनापि कर्मण एव तदुपपत्तेः कर्मणो भोगनाश्यत्वे तत्त्वज्ञानानुपयोगात्। यत्तु नाभुक्तमिति स्मृतिविरोधेन क्षीयन्त इत्यादिश्रुतेरन्यथावर्णनं तन्न स्मृतेः प्रत्यक्षवेदबाधितत्वेन तद्विरुद्धार्थकवेदानुमापकत्वात्। वासुदेवसौभरिप्रभृतीनां कायव्यूहश्रवणात्तत्त्वज्ञानेन कायव्यूहमुत्पाद्य भोगद्वारा कर्मक्षय इति चेन्न तपःप्रभावादेव तत्त्वज्ञानानुत्पादे वा कायव्यूहसम्भवात् भोगजनार्थञ्च कर्म्मभिरवश्यं तत्तत्कायनिष्पादनमिति न तत्र तत्त्वज्ञानोपयोगः। यौगपद्यञ्च कायानां तज्जनकधर्म्म स्वभावात् तपःप्रभावाद्वा। न च ज्ञानं भोगद्वारा कर्म्मनाशकमित्युक्तम्। एतेनागमयोः परस्पर विरोधादनिर्णये विमतिपदं कर्म्म भोगनाश्यं प्रायश्चित्ताद्यनाश्यत्वे सति कर्म्मत्वात् भुक्तभुज्यमानकर्म्मवदिति अनुमानान्निर्णय इत्यपास्तं ज्ञानस्य प्रायश्चित्ततुल्यत्वेनाप्रयोजकत्वात् श्रुतिबाधितत्वात् न च शब्दतोधिकारः अन्यथा निष्फलत्वे न प्रवृत्तिरिति वाच्यं सर्गफलत्वेऽङ्गत्वविरोधात् प्रवृत्तिश्च फलवद्यागान्विततया तदुक्तं "यागे रागादङ्गे वैधीति"।

ननु"तावदेवास्य चिरं यावन्न विमोक्ष्येऽथ संपत्स्यते कैवल्येनेति"श्रुतेस्तावदेवास्योत्पन्नतत्त्वज्ञानस्य चिरं विलम्बोयावन्नोत्पन्नकर्मणो विमोक्षः,अथ संपत्स्यते कैवल्येनेति" तत्र भोगेनक्षपयित्वेति शेषः न च शेषे मानाभावः सत्यपि विज्ञाने कर्म्मावस्थाने क्लृप्तसामर्थ्यस्य भोगस्यैव नाशकत्वेनाक्षेपादिति चेन्न तत्त्वज्ञाने सति तत्त्वज्ञानदशायां न मोक्षः किन्तु तदन्तिमक्षण इत्यर्थ-

त्वेनाप्युपपत्तेः । यत्तु अकृतप्रधानाङ्गापूर्वाभिप्रायमेतत् ज्ञानाग्निरित्यादि तेषां काम्यानां नाशकान्तराभावादिति तन्न प्रधानार्थं तया कल्पनां तदभावे तत्सामग्र्यसिद्धेः तत्सत्त्वेऽपि सर्व्वकर्म्मपदस्य कर्म्मान्तरापरिग्राहकस्य सङ्कोचे मानाभावात् यदपि भस्मसात्करणादिना फलाजनकत्वमुच्यते तत्त्वज्ञानात् स्मृतमपि विहितं कर्म न फलायेति तथा च श्रुतिः "तद्यथा पुष्कर पलाशे नापः श्लिष्यन्ति" इत्यादि तदपि न हि भस्मसात्करणं क्षयस्यानुत्पत्तिरुच्यते न च लक्षणा मुख्ये बाधकाभावात् उच्यते । कर्मणो भोगनाश्यत्वेऽपि ज्ञानस्यकर्म्मनाशकत्वे भोगस्य तत्त्वज्ञानव्यापारत्वात् न च भोगमात्रस्यैव कर्म्मनाशे सामर्थ्यात्तत्त्वज्ञानव्यभिचारः कर्मप्रागभावसहवृत्ति कर्म्मनाशे युगपत्कर्मभोगे वाऽव्यभिचारात् अतएवानुमानेनागमबाधाप्रयोजकत्वेन च श्रुतिवाक्यशेषे मानाभावः उत्पन्नतत्त्वज्ञानस्यापवर्गविलम्बोपपादनार्थमुक्तरीत्या भोगस्यैवापेक्षत्वादिति । तदस्यापवर्गस्य परमपुरुषार्थस्य श्रुतिसिद्धकारणमनुमानं विविक्तमिति ।

इति महामहोपाध्याय गङ्गेशविरचिते तत्त्वचिन्तामणावनुमानपरिच्छेदः

समाप्तः ।

शिवम् ।

ओं तत्सत् ।

८६ अनर्घराघव नाटक (मुरारिकृत) २

८७ दैवतब्राह्मण सभाष्य १

८८ षड्विंश ब्राह्मण १

८९ मीमांसा परिभाषा ॥०

९० अर्थसंग्रह (लौगाक्षी कृत) (मीमांसा) ॥०

९१ रघुवंश सटीक १॥०

९२ मेघदूत सटीक ।॥०

९३ ईश्वर निरूपणम् (तर्कवाचस्पति कृतम्) १

९४ ईश्वरानुमानचिन्तामणि (गङ्गेशोपाध्याय कृत) १

९५ न्यायदर्शन(सभाष्य सवृत्ति) २॥०

९६ सटीक वाल्मीकि रामायण (बालकाण्डस्य प्रथमावधि त्रयोदश सर्ग पर्यन्तम्) १॥०

९७ रामायणम् बालकाण्डस्य चतुर्दशावधि पञ्चविंशति सर्ग पर्य्यन्तम् रामानुज कृतटीकासमेतम् १॥०

९८ मदनपाल निघण्टु (वैद्यक) १

९९ संस्कृतशिक्षामञ्जरी प्रथमभागः /

१०० संस्कृतशिक्षामञ्जरी द्वितीय भाग ।

१०१ श्रीहर्षचरित [बाणभट्टकृत] १.

१०२ अमर कोष ॥०

१०३ साहित्यदर्पण १॥०

१०४ वेदान्तसूत्र (शारीरक भाष्य तथा गोविन्दानन्द कृतटीका सहित) १०

१०५ वेदान्तपरिभाषा १

१०६ वेदान्तसार सटीक १

१०७ सटीक निदान ४

१०८ कामन्दकी नीतिसार १

१०९ मल्लिकामारुत प्रकरण २

११० अत्रि, विष्णु, हारीत, याज्ञवल्क्य, उशना अङ्गिरा यम आपस्तम्ब, संवर्त्त कात्यायन, वृहस्पति पराशर व्यास शंख लिखित, दक्ष गौतम शातातप वशिष्ठ प्रणीत संहिता (धर्मशास्त्र) १५

१११ मत्स्यपुराण ६

११२ चरकसंहिता (वैद्यक) सम्पूर्ण ६

११३ रसेन्द्रचिन्तामणि (वैद्यक) ४

११४ भगवद् गीता शङ्करभाष्य तथा आनन्दगिरि कृत टीका सहित ५

कलिकाता संस्कृत विद्यामन्दिरे—बि, ए, उपाधिधारिणः
श्रीजीवानन्द-विद्यासागर-भट्टाचार्यस्य
सकाशात् लभ्यानि ।

४६ विवेक चूड़ामणि श्रीमत् शङ्कराचार्य विरचित । =
४७ काव्यसंग्रह ( सम्पूर्ण ) ५
४८ लिङ्गानुशासन सटीक ।०
४९ ऋतुसंहार-सटीक । =
५० विक्रमोर्वशी-सटीक १॥०
५१ वसन्ततिलकभाण । =
५२ गायत्रीव्याख्या ॥०
५३ सांख्यदर्शन ( भाष्य सहित ) सांख्य प्रवचन भाष्य २
५४ भोजप्रबन्ध ।॥०
५५ नलोदय-सटीक ॥ =
५६ ईश केन कठ, प्रश्न मुण्ड [illegible]क्य, ( [illegible] भाष्य ) ५
५७ छान्दोग्य ( उपनिषद् ) सभाष्य-सटीक ५
५८ तैत्तिरीय ऐतरेय श्वेताश्वतर उपनिषद् ) सभाष्य-सटीक २
५९ बृहदारण्यक ( उपनिषद् ) सभाष्य-सटीक १०
६० सुश्रुत ( वैद्यक ) ४
६१ शार्ङ्गधर ( वैद्यक ) १
६२ वेतालपञ्चविंशति ।॥०
६३ पातञ्जल दर्शन(सभाष्य)-सटीक) ४
६४ आत्मतत्त्वविवेक (बौद्धाधिकार) २
६५ मुक्तिकोपनिषत् =
६६ उपमान चिन्तामणि ।०
६७ नागानन्दनाटक १
६८ पूर्णप्रज्ञ दर्शनम् मध्वस्वामि कृत भाष्य सहितम् २
६९ चन्द्रशेखर चम्पू काव्यम् सम्पूर्ण ३
७० सामवेदस्य मन्त्र ब्राह्मणस् भाष्य सहितम् २
७१ आरण्यं संहिता भाष्य सहित १
७२ विद्धशाल भञ्जिका नाटिका १
७३ कारण्डव्यूह (बौद्धशास्त्रम्) २
७४ कुवलयानन्द-सटीक(अलङ्कार) ३
७५ प्रियदर्शिका नाटिका—सटीक श्रीहर्ष विरचित ।।०
७६ सारस्वत व्याकरण-सटीक पूर्वार्द्ध ।।०
७७ वासवदत्ता-सटीक २
७८ पुष्पबाण विलास काव्य (कालिदास कृत) सटीक ॥
७९ महिम्न शतकम् पदारविन्द शतकम्, स्तुति शतकम्, मन्दस्मित शतकम्, कटाक्ष शतकम् १
८० मनुसंहिता कुल्लूकभट्ट कृत टीका सहित ५
८१ नैषधं चरितम् ( मल्लिनाथ कृत टीका सहित ) १०
८२ चन्द्रलोक (प्राचीन अलङ्कार) ॥०
८३ वीरमित्रोदय(स्मृति शास्त्र) १०
८४ भावप्रकाश ( वैद्यक ) १०
८५ प्रबोधचन्द्रोदय नाटक सटीक २

